ॐ अर्हं

॥ श्रीसिद्धर्षिविरचितं ॥

# ॥ श्री श्रीचंद्रकेवलिचरित्रम् ॥

-प्रकाशक-

सदग्रहस्थ

*

वीर संवत् २५०४] [विक्रम संवत् २०३४

* *

किंमत ) पठनपाठन

# प्रस्तावना

नन्दन्तु नीतिनिपुणा' शास्त्रनिष्णाता. सज्जना —इह खलु जन्मजरारोगमृत्यादिदु खपूरिते ससारसागरे तिमिगिलन्यायप्रवृत्ता. प्राणिनः पर्यटन्तः प्रचुरतरदु खा दरीदृश्यन्ते । ते च सुखाभिलाषिणोऽपि तदुपायमजानाना एव वृथा गमयन्त्यायू ष्यन्यान्यासदुपाया- सक्ता । निरपायसुख च विना निर्वृ ति नास्त्येवेति सुप्रसिद्ध , सा च विना कर्मक्षय न प्राप्यते, स च ज्ञानतपोभ्यामेव, तत्रापि तपो भावविशुद्ध यथाविधि कृतमवश्य निकाचितान्यप्यनन्तभवोपार्जितानि कर्माणि क्षपयितुमलम् । यदुक्तमागमे—

" अनिआणस्स विहिए, तवस्स तविअस्स कि पससामो । किज्जइ जेण विणासो, निकाईयाण पि कम्माण ।। १ ।। "

तच्च तपोऽनेकविध वर्णितमागमे, तथाप्यत्राचाम्लवर्धमानाख्य तप उत्कृष्टफलद प्रतिपादितम्, श्रीचन्द्रस्य तदनुभावादेव सुखि- तत्वात् । यदुक्तमत्रैव ग्रन्थे प्रथमपत्रे—" यत उक्त सिद्धान्ते—

" एगाईआणि आय—विलाणि एकेकवुड्ढिमताणि । पज्जत अब्भतट्ठाणि, जाव पुण्ण सय तेसि ।। १ ।।

अय आब्रिलवद्धमाण, नाम महातवचरण । वरिसाणि तत्थ चउदस, मासतिग वोस दिवसाणि ।। २ ।। "

उक्त' च—ज चदणेण तइआ, तविय अइगुरूअ वद्धमाणतव । तस्स फलेण हु एसो, सिरिचदनिवो सया सुहिओ ।।११।। इति ।।

एतदर्थविस्तरार्थमेवात्र ग्रन्थे श्रीचन्द्रनृपस्य कथानुयोग सक्षिप्य लिखित' श्रीसिद्धर्पिणा प्राक्प्राकृतचरित्रात् । तथा चात्रैव पर्यन्तपत्रे—

" वस्वकेपुमिते [ ५९८ ] वर्षे, श्रीसिद्धर्पिरिद महत् । प्राक्प्राकृतचरित्राद्धि, चरित्र सस्कृत व्यधात् ।। ५९ ।।

नस्मान्नार्थसदोहा—दुष्कृतेय कथाऽत्र च । " इत्यादि

अनेन पर्यन्तग्रन्थेन कर्तुर्नाममात्रमेव ग्रन्थस्यास्य पुराणत्व च निश्चीयते, अन्यच्च कर्तुर्जन्मभूम्यादिक प्रव्रज्यादिक गुर्वादिक च सर्वमपि अज्ञातमेवास्ति, अस्मिन् ग्रन्थे कुत्रापि तत्सवन्ध्युल्लेखाभावात् प्रशस्तेरप्यभावात् । कदाऽय ग्रन्थकर्ता जात, कास्कानन्य-ग्रन्थान् ग्रथितवान् इत्यादि वृत्तान्त कुतोऽपि नोपलभ्यते । किं च उपमितिभवप्रपञ्चकथाया कर्ता श्रीसिद्धर्षि गणी ख्यात स एवाय न वा इति न ज्ञायते, तथापि स तु महात्माऽद्वितोय इति स एवायमिति न सभाव्यते ।

इद कथानक श्रीवर्धमानस्वामिना श्रेणिकराजाग्रे निरूपित, तदनुसारेण श्रीगौतमस्वामिना वैशालीनगरीस्वामिनश्चेटकराजस्याग्रे कथितमित्येतत्कथानकमूलशुद्धि । एतस्य सक्षिप्त सार किंचिल्लिख्यते—

*प्रथमाधिकारे*—आस्मन् जम्वद्वीपे भरतक्षेत्रे कुशस्थलपुरे प्रतापसिंहो राजा, तस्य पञ्चशती राज्ञीना जयादयश्च पुत्राश्चत्वार । एकदा नृपो दीपशिखा नगरी गत, तत्रत्यदीपचन्द्रनृपस्य कन्या सूर्यवती परिणिनाय, ता च पट्टराज्ञी व्यधात् । तत्र राज्योपद्रवकारक शूरपल्लीपति दु साध्यमपि प्रतापसिंहनृपो जित्वा ववन्ध । तत सूर्यवती लात्वा स्वपुरमाजगाम, सूर्यवत्या सह क्रीडन् राज्य च पालयन् कियन्त काल निनाय । एकदा जयादीना पुर कोऽपि नैमित्तिक समागत्य प्रथम स्वीयमद्भूतमुपदेशदायक वृत्तान्त निवेद्य तत प्रोक्तवान्– सूर्यवतीपुत्रस्य भाग्यवतो राज्यप्राप्तिर्भविष्यति न तु युष्माकमिति ' । तच्छ्रुत्वा खेदमेदुरास्ते चत्वारोऽपि भ्रातर सूर्यवत्या जातमेव पुत्र मारयितु निश्चिक्यु । अय सर्वोऽपि वृत्तान्तस्तत्र गुप्तवृत्त्या स्थितवत्या सूर्यवतीदास्या सैन्ध्या श्रुत्वा गत्वा च स्वस्वा मन्यै निवेदितो रहसि । एकदा शुभस्वप्नचतुष्केण सूर्यवती सगर्भा जाता । तज्ज्ञात्वा नृपेण पृष्ट स्वप्नपाठको भाग्यव-

त्पुत्रोत्पत्ति जगाद । ततः सूर्यवत्याश्चन्द्रपानदोहदो जातः, स च नृपाज्ञया मन्त्रिणा पूरित । तत एकदा राजा कणकोट्टनगरस्य दुर्दान्तौ मल्लमहामल्लौ जेतुं सर्वसामग्र्या सपुत्र प्रस्थितः, जयस्त्वाहूतोऽपि मायया न जग्मिवान् । चिरकालेन शत्रू जित्वा तत्पुर स्वायत्तीकृत्य चिर तत्रैव क्रीडन् स्थितवान् । इतश्च सूर्यवतीप्रसूतिकाले जयकुमारसुभटाः प्रच्छन्नास्तत्रागत्य स्थिताः । तज्ज्ञात्वा भीता सूर्यवती सैद्रीसखीबुद्धया पुष्पहारिण्या दास्या सुगुप्तं प्रसूत पुत्र पुष्पवाटिकाया निर्माल्यपुष्पप्रच्छन्न कृत्वा मोचयामास । ततो जयेन सूतिकागृहे सर्वत्र शोधितोऽपि स न लब्धः, निराशश्च स्वस्थान गत. । ततो दासी वाटिका गत्वा तत्र पुत्रमदृष्ट्वा प्रत्यागत्य स्वामिन्यै तदप्राप्ति निवेदितवती । तच्छ्रुत्वा राज्ञ्यादीना महान् शोको जात. । रात्रौ स्वप्ने कुलदेव्या राज्ञ्याः कथित—'अन्यत्र मया रक्षितस्ते पुत्रस्ते द्वादशे वर्षे नृपीभूय मिलिष्यतीति शोको न कर्तव्य' इति । इतश्च तस्मिन्नेव पुरे धर्मी धनी च लक्ष्मीदत्तो वणिग् लक्ष्मीवतीप्रियोऽपत्यरहित आसीत् । तेन तत्रैव रात्रौ स्वप्नो दृष्ट, गोत्रदेव्या पुत्ररत्नलाभ प्रोक्तः । प्रातस्तदुत्सवार्थ पुष्पाण्यानेतु तस्मिन्नेवोद्याने गतेन तेन स एव बलो लब्धः प्रियायाश्च समर्पितः । गूढगर्भाया मे भार्याया. पुत्रो जात इति कथनपूर्व जन्मनामकरणाद्युत्सवाश्चक्रिरे श्रीचन्द्रश्चेति नाम पप्रथे । तद्भाग्येन लक्ष्मेश्वरः श्रेष्ठी कोटीश्वरोऽभूत् । मन्त्रिभ्रातृजो गुणचन्द्रस्तस्य मित्रो जातः सवया । गुणधरोपाध्यायसमीपे शस्त्रशास्त्रधनुर्विद्याद्यखिलकलानिष्णातो बभूव । इतोऽष्टवर्षान्ते रत्नपुर साधायित्वा प्रतापसिहराजः स्वपुरमागतः सूर्यवतीवृत्तान्त श्रुत्वा शुशोच । इतः श्रीचन्द्रोऽष्टाना श्रेष्ठिनामष्टौ कन्या. परिणीतवान् ताभि. सह भोगाश्च भुक्तवान् । एकदा समित्र स पुराद्बहिरुद्यान गतस्तत्र सरसस्तीरेऽश्वविक्रयकात् सुवेगावश्वौ सुलक्षणौ महामूल्येन गृहीत्वा सुवेगाख्य रथ कारयित्वा नृपसारथिपुत्र धनजय सारथीकृत्य विजहार । एकदा सुप्रसन्नाद् भैरवाभिधयोगिनः सकाशात्

क्षुद्रप्राण्यन्यकारिणी मूलिका लब्धवान् । इत्यादि ॥

*द्वितीयाधिकारे*—तिलकपुरनगरे श्रीतिलको राजा, रति पट्टराज्ञी, पुत्री तिलकमञ्जरी । तस्या स्वयवरे नानादेशराजपुत्रा विजयादयश्च कुमारा गता । तच्छ्रुत्वा स्वयवरदिने एव श्रीचन्द्र पित्रादीनकथयित्वा समित्र सुवेगेन रथेन तत्र गत्वा केनापि राजपुत्रादिनाऽसाधित राधावेध हेलया साधयामास । तत्क्षण तिलकमञ्जर्या तत्कण्ठे वरमाला चिक्षिपे । तदा सर्वैर्नृपादिभि साश्चर्यै: कोऽय कोऽयमित्युक्तवद्भिर्महान् समर्दश्चक्रे । तदवसर प्राप्य श्रीचन्द्रकुमार समित्र प्रच्छन्न रथमारुह्य स्वपुर तदैवाजगाम । तत कन्यावचनेन श्रीतिलकनृपेण सर्वतस्तच्छुद्धि कारिता, तथापि स न लब्ध । जयादय कुमारा. सखेदा स्वपुरमायाता । प्रतापसिहराजेन तद्वृत्तान्त ज्ञात्वा सश्रेष्ठिन श्रीचन्द्रमाहूय सादर प्रशस्य तस्मै ग्रामादिक ददे । एकदा रथमारुह्य समित्र कुमारो वनमियाय । तत्र रात्रौ वृक्षतले सुप्त , तदा तद्वृक्षस्थेन कीरेण राज्यमात्रपदप्रापक फलद्वय दत्त, भक्षित चैकैक श्रीचन्द्रगुणचन्द्राभ्यम् । अग्रे गच्छन् कुमार: समित्र साधु दृष्टवा त नत्वा तदुपदेशेन ससम्यक्त्व धर्मं प्राप्य नमस्कारमन्त्रजाप नियमितवान् । अत्र देशनया मुनिना सामायिकनमस्कारमन्त्रयोर्महिमा विस्तरेण प्रोक्तोऽस्ति । ततो गच्छन् दीपशिखानगर्या चन्द्रकलाभिधा पद्मिनी कनी यथाविधि सविस्तर परिणिन्ये कुमार , सा च पट्टदेवी भाविनी । ततस्तया पत्न्या सहित स्वगृहमागत्य सुखेन तस्थौ । अथ कुमारो महादाता कर्णादिरिवाभूत्, ततोऽपि स महाख्यातिमानासीत् । तेनैव दातृगुणेन जयादिप्रेरितेनैकेन मागधेन श्रीचन्द्रस्य समीपे वर मार्गयता वायुवेगाश्वयुगादिकोऽश्वो मार्गित , तत श्रीचन्द्रेण सरथ तदश्वयुग दत्त । एतद्दातृगुण दृष्टवा पितर खेदयुक्त ज्ञात्वा कुमार एकाकी प्रच्छन्न स्वपुरान्निर्गत्य देशान्तरमियाय । इत्यादि ॥

*तृतीयाधिकारे*—श्रीचन्द्रो विदेशे सर्वत· सचरन् अदृश्यपुरुषच्छायामपश्यत्, तदनुसारेण स तद्गुहा यावग्दतः, बहि. स्थित्वा पश्यति स्म । तत· स पुरुषस्ततो निर्गत्य गुटिका मुखे क्षिप्त्वाऽदृश्यो भूत्वा पुर प्रति प्रस्थित· । तदा कुमारो महती शिलामप्राकृत्य गुहाया प्रविष्ट· । तत्रैकां रूपवती तरुणी वीक्ष्य ‘ हे भगिनि ! कासि त्व ? ’ इति पप्रच्छ । साश्रुलोचनया तया कथितम्—“नायकाख्यनगरे नृपस्य मंत्री रविदत्तस्तस्य भार्या शिवमती नाम ब्राह्मण्यस्मि । तत्र नगरेऽयं सिद्धचौर सदा चौर्यं करोति, तेनाहमत्र बलादानीताऽतीव दु खिनी तिष्ठामि ” इत्यादि श्रुत्वा कुमारेण दयालुना ता बहिर्निष्कास्य तद्विवरानने ता शिलां दृषद चान्या प्रौढा मुक्त्वा ता शिवमती स्वस्थाने प्रापयत् तद्भर्त्रा मन्त्रिणा स प्रशंसित· । ततः श्रीचन्द्रस्तद्वने गत्वा तत्र युक्त्या बलेन च तामदृश्यीकरणगुटिकां गुहान्तर्वर्तिन स्वर्णरत्नादिभृतमावासं च लब्धवान् । ततः पर्यटन् कुतोऽपि वृक्षोपरिस्थितात् शुकात् औपधद्वयं प्राप्य महेन्द्रपुर प्राप्त·, तत्र त्रिलोचनाभिधो नृपस्तत्प्रिया गुणसुन्दरी, तयोः सुता सुलोचनानाम्नी जात्यन्धामौषधेन सुलोचना कृत्वा परिणीतवान्, ततो गच्छन् मार्गे कु डलाख्यपुरे राक्षसोपद्रव शमयित्वा तन्नृपपुत्रीमपि चन्द्रमुखीमुपयेमे । राज्यद्वय च लेभे, चौराद्युपद्रवान् च नाशितवान् । इत्याद्यनेकविद्यौषधिसमन्वित. श्रीचन्द्रः स्थाने स्थाने महतादरेणानेकानि राज्यानि प्राप राजपुत्रीश्च पर्यणैषीत् । परोपकारकार्याण्यपि बहूनि कृतवान् । अग्रे गच्छन्मार्गे क्वचिद्वनमध्ये चन्द्रहासखड्ग प्राप्तवान्, तेन तत्परीक्षार्थं वल्ली चिच्छेद, तन्मध्यस्थितस्य विद्यासाधकविद्याधरस्य शीर्षं छिन्न, तन्महत्पातक लग्न ज्ञात्वाऽतीवात्मान निनिन्द । ततोऽग्रे पातालमन्दिरे वानरीरूपा मदनसुन्दरी राजकन्यामौषधिप्रयोगेण मानुषी कृत्वा वृत्तान्त ज्ञात्वा परिणिनाय· । वानरीकरणौषधि सप्रतिपक्षा च प्राप । अन्तरान्तरा साधुसमागमे तेभ्योऽन्नपानादिदान दत्वा तदुपदेश श्रुत्वा दृढधर्मो जातः। एकदा वनान्तः कस्यचिद्योगिनः सुवर्णपुरुष-

सावकस्य तत्प्रार्थनया तस्योत्तरसाधको जात, पर नमस्कारप्रभावात् स्वयमक्षत एव विद्यादेव्याऽग्निकुण्डमध्ये क्षिप्त योगिशरीरमेव सुवर्णपुरुपीभूत प्राप्तवान् । एकदा स कुमार कनकाख्यपुरे जगाम । तत्रापुत्रे राज्ञि मृते पञ्चादिव्येन तद्राज्य प्राप्य तन्नृपकन्या कनकावली च पर्यणयत् । तत्र स्वमित्रो गुणचन्द्रो मिलित । त तत्र प्रधानपदेऽस्थापयत् । इत्यादि सविस्तर निरूपितम् ॥

*चतुर्थाधिकारे*—एकदा समित्र श्रीचन्द्रोऽरण्ये विचरन् वशजाल्या मौक्तिकयुग्म प्राप । तत्र च पर्वते स्थिता भिल्ली लोहकुभ स्वर्णकुभ कृत्वा तस्यै दत्त्वा च दु खमुक्तामकरोत् । ततो वीणापुरमागत्य तद्राजपुत्री पद्मश्रिय तन्मत्रिपुत्री कमलश्रिय चोपयेभाते कुमारमित्री । तदवसरे कुमारजननी सूर्यवती राज्ञी सुदु खिता मिलिता । ता तत्र सगौरव स्थापयामास । एकदा श्रीचन्द्रश्चतसृभि श्रेष्ठिपुत्रभार्याभि सह विद्यता गगनमार्गयायिन शमीवृक्षमदृश्यीभूयावलम्ब्य प्रच्छन्न कर्कोटद्वीपे ययौ । तत्रत्यरविप्रभराजस्य नव कन्या उपयेमे । ततो निवृत्ताभिस्ताभि सहैव शमीवृक्षमवलम्ब्य कुशस्थलपुरमाजगाम । तत्र सूर्यवतीविरहार्दित काष्ठभक्षणतत्पर स्वपितर प्रतापसिंहनृप नैमित्तिकवेपधारी श्रीचन्द्रो ररक्ष । तत. पितृमारणतत्परैर्जयादिकुमारैर्निर्मापिताल्लाक्षागृहादपि स एव पितर रक्षितवान् । तत्रैवैकदा क्षोभितसकलपौरनृपादिलोक मत्त गज वशीकर्तुं नृपादिभिर्वार्यमाणोऽपि स नैमित्तिकस्त वशीकृत्योपर्यारुरोह । स च गजो वेगेन वनपियाय, त्रिदिन्या निर्मदो भूत्वा सरसि स्थित. । कुमारोऽपि ततोऽवतीर्य जल पपौ । तत्र गजजिघृक्षून् भिल्लान् जिगाय । तदा भिल्लकनी मोहिनी अनिच्छन्तमपि श्रीचन्द्र वव्रे, तत' श्रीचन्द्रः तान् भिल्लान् सविस्तर धर्मोपदेशेन धर्मपरायणान् चक्रे । तत' कुडिनपुरे यक्षमदिरे सुप्त श्रीचन्द्र नृपपुत्री सरस्वती बलात्पर्यणयत् । तस्याः पित्रा प्रहित सैन्य स जिगाय, ततो राजा त क्षामयित्वा महान् विवाहोत्सवश्चकार । ततो महाटव्या पातालनगरे श्रीचन्द्रो गतः । तत्र स्वप्रिया मदनसुन्दरी आसीत् तस्या वचनेन त ज्ञात्वा रत्न-

चूलादयोऽष्टौ कन्यास्त परिणिन्यु । तेनापि तासा माता दु खरहिता कृता । ततो रुद्रपल्ल्या नगर्यां वज्रसिहराजस्य पुत्री हसावली श्रीचन्द्र वुवूर्षु केनाप्यन्येन कूटश्रीचन्द्रेण परिणीता, ततस्त कूट ज्ञात्वा हसावली काष्ठभक्षणीद्यता जाता, राजा च त कूट बध्ध्वा ताडयामास, तदवसरे श्रीचन्द्रेणागत्य सर्वे धर्मोपदेशेन प्रतिबोधिता । ततो नृपस्याग्रहेण श्रीचन्द्रस्तत्कनीयसी चन्द्रावलीपुत्री परिणीतवान् । ततो नवलक्षदेशे गत्वा श्रीचन्द्रस्तन्नृप गुणविभ्रम जिगाय । तत्र देशेऽनेकचैत्यशालामठादीनि धर्मस्थानानि व्यधात् । तत कल्याणपुरमागत्य गुणविभ्रमराजपुत्री गुणवतीमुपयेमे । तत कातोनगरीसमीपवर्तिवटग्रामे गत्वा गुणधरमुपाध्याय बहुद्रव्यादिनाऽऽदृतवान् । तत कापील्यपुरे चौरोपद्रव निवारितवान् । अन्ते प्रतापसिहराज श्रीचन्द्र मातृसहित स्वपुरमानीय महोत्सवेन राज्ये स्थापयामास । श्रीचन्द्रो राजा जात, तस्य सर्वा प्रिया आगता, तस्य सप्तदश राज्य सहस्रशो भोगपत्न्यश्चाभवन् । पश्चात् प्रतापसिह सूर्यवत्यादिप्रियासहित पौरपौरीयुतो दीक्षा जग्राह । सुष्ठु चरित्र प्रपाल्य सर्व एकावतारिणो जाता. । श्रीचन्द्रस्तीर्थयात्रादिधर्मकृत्यानि कुर्वन् चिर साम्राज्य पालयामास । अन्ते सोऽपि सर्वराज्ञीपौरपौरीयुतो दीक्षा जग्राह । चिर चारित्रं प्रपाल्य स केवली जात, अन्येऽपि केचित्साधव. काश्चित्साध्व्यश्च केवल प्राप्य सिद्धा । केचिदेकावतारिणश्चाभवन् । इत्यादि ।।

अस्मिश्चरित्रे स्थाने स्थाने प्रसङ्गानुसारेण धार्मिकव्यावहारिकमार्गद्वयप्ररूपण विस्तरत: कृतमस्ति । स्त्रीपरीक्षापुरुषपरीक्षा-चोरपरीक्षायोगिपरीक्षासाध्वसाधुपरीक्षादिविषयोऽपि चेतश्चमत्कारी विदुषां चेतास्याह्लादयतीत्यय ग्रन्थ साद्यन्त पठनपाठनव्याख्या-नार्ह इति प्रतिभाति । भाषाऽप्यस्य स्फुट कथयति कर्तु र्भाषापाण्डित्य धार्मिकपाण्डित्य च । कि वहुना ? विद्वास स्वयमेवास्य रसा-मृतस्य पातारो भवन्तु इति ।।

कि च ग्रन्थोऽय पुरा श्रीजामनगरपुरे पं शा हीरालाल हंसराजेन स्वमुद्रालये मुद्रित', सोऽयमस्माभि' अमदावादनगरादाचार्यश्रीविजयसिद्धिसूरीश्वरसकाशादस्य ग्रन्थस्य प्राय शुद्धा हस्तलिखितप्रति मार्गयित्वा ससच्छास्त्रिणा जेठालालेन शोधयित्वा मुनिवर्यश्रीमगलविजयोपदेशेन साहाय्यकर्तु' श्रीशिहोरवास्तव्यश्रेष्ठित्रयस्य द्रव्यव्ययेनास्मिन्मुद्रालये मुद्रापितः । शोधनसमये मुद्रितप्रतेर्हस्तलिखितप्रतेश्च बहुपाठव्यत्ययो दृष्टिपथमायातस्तत क्वचित्क्वचित् अस्मिन् ग्रन्थे लिखितप्रतेः पाठः ( ) कौसमध्येऽधो वा पृथग् लिखित' मुद्रितप्रतिपाठश्च तदवस्थ एव स्थापित., क्वचिच्च लिखितप्रत्यनुसारेणाशुद्ध इति मत्वा प्रतिक्षिप्तोऽप्यस्ति, परतु बुद्धिकल्पितपाठ कुत्रापि न लिखितोऽस्ति ।

अस्य प्रुफवाचने कृतेऽपि प्रयत्ने दृष्टिदोषात् मुद्रणालयदोषाच्च क्वचित् स्खलना दृश्यते चेत्सा सुधीभिः शोधनीया ज्ञापनीयाश्च वय, येन पुनर्मुद्रणादिसमये सावधाना भवाम इति प्रार्थयति प्रसिद्धकर्ता । इति शम् । शुभ भवतु ॥

स १९९३ ज्येष्ठशुदि पूर्णिमा

शा. कुंवरजी आणंदजी,
भावनगर

आगमोद्धारक आचार्य देवेश श्री सागरानन्दसूरीश्वरजी म.सा के आज्ञावर्ती स्व. तिलकश्रीजी म सा. की शिष्या मालव देशदीपिका स्व. पू. मनोहरश्रीजी म सा. की पट्टविभूषिका सरल स्वभावी प पू. फल्गुश्रीजी म. सा. की शिष्या अरुणप्रभाश्रीजी म. सा. अमितगुणाश्रीजी म. सा. अनन्ययशाश्रीजी म. सा. अनन्तगुणाश्रीजी म. सा. तथा अमीपूर्णाश्रीजी म सा के ५०० आयम्बिल की तपस्या निमिते सादर समर्पण

प. पू फल्गुश्रीजी म सा

दीक्षा सम्वत १९९१ जन्म सम्वत १९६७

इति शुभम

१. इन्दरमलजी भेरुलालजी बड़ोद धींग

२. सागरमलजी देवेन्द्रकुमार मेता बड़नगर

३. जुहारमलजी हस्तीमल भंडारी वार्शी

४. धन्नालालजी मन्नालालजी चोरड़ीया इन्दौर

५. मोतीलालजी राजकुमार बापना इन्दौर

६. पारसकुमार राजेन्द्रकुमार परमार कर्जत

## ॥ श्री शंखेश्वर पार्श्वनाथ नमः ॥

नमो नम सागरानन्द सूरये

भारतवर्ष एक धर्म प्रधान देश है उसी रम्य देश मे मालवप्रदेश के कण-कण मे धर्म समाया हुआ है वह मालवा की पवित्र भूमि अनेक सतपुरुषों नराधिपो महापुरुषों के चरणो का स्पर्शकर अपने आपको धन्य मानती है जहा राजा भोज जैसे राजा हुवे सप्रत्ति जैसे राजा हुये जिन्होने दशोदिगन्त मे जैन धर्म का प्रचार किया। पराक्रमशाली विक्रमादित्य राजा हुये। अयवन्ती सुकुमाल जैसे सुपुत्र हुये जिन्होने भरयौवन मे ससार के सुख वैभव सह ३२ पत्नीयो का त्याग कर सयमपथ पर अग्रसर हुये। कवियो के गुरू महाकवि कालिदास जैसे महान कवि हुये। भला ऐसे ऐसे वैभव शाली यशस्वी कुलदीपको को जन्म देकर कौनसी माता हर्षान्वित नही होवे। एक ही सुपुत्र कीर्ति वश को फैलाने वाला हो जाता है तो माता पिता अपने आपको ससार के सबसे परम सौभाग्य शाली मानने लगते है। तो ऐसे-ऐसे पराक्रमशाली गौरवशाली पुत्रो को प्राप्त कर मालवभूमि क्यों न फुले ? क्यो न झुमे ? क्यों न नाचे ? अस्तु

उसी मालवभूमि मे उज्जयिनी (अवतिका नगरी) नगरी है। जहा पर श्रीपाल महाराजा जैसे परम धर्माराधक चुस्त श्रावक हुये मयणासुन्दरी जैसी महासती हुई। उसो अवन्ति तीर्थ के समीप अपने आप मे श्रेष्ठ ऐसा एक नन्हासा आगर नाम का शहर है, उसी गाव मे प्रतिभा एव वैभव से सपन्न शेठ श्री मोतीलालजी कटारिया अपनी पत्नी जडावबाई एव तीन पुत्ररत्नो के साथ ससार के सुख वैभव का आनन्द लेते हुये रहते थे।

उसी सुखी सपन्न परिवार मे जब चारों तरफ आम्रवृक्ष की मजरियों पर कोयले मधुर गु जारव कर रही थी अर्धपके आमो की मधुर अमृत-तुल्य सौरभ चारो तरफ फैलकर मानव मस्तिष्क को सुवासित कर रही थो। ऐसे मस्ती भरे मौसम मे शेठ श्री कटारियाजी के यहा जैठ मास के शुक्ल पक्ष की पचमी रविवार के दिन एक पुत्री रत्न का जन्म हुआ। चारो तरफ हर्ष ही हर्ष पिता गौरवान्नित हुये ऐसी

मुकोमला पुत्री को पाकर। माता प्रसन्न हुई ममतामयी गौरवर्णा पुत्री के मुख कमल को देख कर तीनो भाई चहक उठे अपनी नन्हीसी बहन को पाकर। जैसे सुगधित पुष्प सब को प्रिय होता तथैव यह कोमल बालिका भी सबकी प्रिय पात्र बनी। फूलसी सुकोमल होने से यथार्थ नाम भी फुलकु वर रखा। माता पिता ने बडे प्यार से उन्हे Short and Sweet के न्याय से फुली कहते थे गाव मे फुलीबाई इसी नाम मे प्रख्यात है, किन्तु भाविवश दयामूर्ति पिता के पूर्व प्यार को फुली बेन नही पा सके। जब आप ३ वर्ष के थे तब ही यमराज के क्रूर पजो ने फुली बेन के पिता श्री को अपने ग्रास बना लिया अधखिला पुष्प निसहाय हो गया। तथापि धैर्य गुणो से मढी हुई माता जडावबाई ने अनूपम ममता से पालन पोषण कर बाल्यवय मे ही अबोध बालिका को मुखी बनाने का सोचकर लग्नग्रथी से बाध दिया किन्तु जो मुकोमल हाथ रजोहरण से मुशोभित होने वाले हो उन हाथो मे यह क्षणिक ककार युक्त ककण कैसे रह सकते है। ९ मास की अल्पावधि मे ही *"सजोग मुलाजीवेण पत्ता दुक्ख परपरा"* इस कहेवत को चरितार्थ करने मानो अकस्मात् पतिदेव श्री कन्हैयालालजी स्वर्गवासी हो गये हाय ? विधी को विडबना। किन्तु ज्ञानी भगवतो ने जो कहा है कि किसी व्यक्ति या पदार्थ मे सुख दुख देने की ताकत नही व्यक्ति अपनी कल्पना से ही मुखी दुखी होता है वैसे ही पति का वियोग क्या होता है रोहीणी के समान जिन्हे उनका नाम भी नही मालुम ऐसे फुलीबेन व्यवहार एव गृहकार्य मे ता दक्ष थे ही धर्म कार्य मे भी विशेष रस लेने लगे। जिन गुरुओ से सपर्क साधा उनसे ज्ञान प्राप्त किया माता की प्रेरणा से तप त्याग मे अग्रसर होते रहे। मातु श्री को अतिम इच्छा थी बेटी दीक्षा लेना।

मातृस्वर्ग पश्चात मालवदेश दीपिका मुसयमी धर्म प्रचारिका प पू गुरुदेव श्री मनोहरश्रीजी म सा के सानिध्य को पाकर जीव अजीव का सूक्ष्म ज्ञान प्राप्त किया और अति वैराग्य मे रस लेते हुये भरे पूरे परिवार का परित्याग करके अपने ससुराल के गाव (पिपलोन कला) मे केशरीयाजी तीर्थोद्वारक आचार्य देवेश श्री चद्रसागर सूरीश्वरजी म सा के शुभ हस्ते १९९१ मे परम उत्कृष्ट भाव मे दीक्षा ग्रहण की। १९९१ फागण विदी ३ को दीक्षा के साथ शिक्षा प्राप्त करी गुरुदेव श्री के चरणो मे सर्वस्व समर्पण कर दिया।

*श्रेयासि बहुविघ्नानि* के न्याय से दीक्षा के प्रथम वर्ष मे ही निश्रादाता पू. गुरुदेव श्री मनोहर श्री जी म को भगदर जैसी भयकर व्याधि ने आन घेरा। फिर भी जीवन मे गुण सर्वोपरि मान्य सेवा निष्ठ होने मे इतने प्रेम एव लगन मे पूज्य श्री की सेवा करी

इन्दौर में एकत्रित होतें तो करते रहते आर कइ वात पूज्य श्री सुनाते रहते थे किन्तु
जिसकी सराहना आप श्री के गुरुदेव जब कभी हम इन्दौर में एकत्रित होतें तो करते रहते और कई बात पूज्य श्री सुनाते रहते थे किन्तु
विस्तार भयेन यहा देना असभव है । आखिर वेदोदय दुर हुआ गुरुजी स्वस्थ हुये एव अपार वात्सल्य एव प्यार के साथ उन्हो ने ज्ञान का
खजाना अर्पण किया हमेशा गुरु आज्ञा को प्राण समझने वाले गुरुदेव के सानिध्य मे जिनके अगणित गुण विकसित हुये ऐसे पूज्य श्री का
नाम भी दीक्षा दाता पू आचार्य देवेश श्री ने *फल्गु श्री* इस प्रकार रखा एव अपार आशीर्वाद दिये कि खुब शासन करना । गुरु कृपा से
अनुपम ज्ञान दर्शन चारित्र मे उजमाल बनते हुये गुजरात, सौराष्ट्र, काठियावाड आदि तीर्थो मे विहार करते हुये २० उपवास १६
उपवास अठ्ठाईया ६ मासी ४ मासी ३ मासी २ मासी १।। मासी १ मासी वर्प तप वर्धमान तप की ४० ओली नवपदजी की ओलो
अगणित बेले तेले एकातर आदि तपाचरण करते हुये कलिकाल मे ससार सागर से तीराने वाले तीर्थाधिराज पर ६ चौमासे एव चार
नवाणु करी । मालवा मे भी छोटे वडे गाँवों मे विचरण करके कई जगह प्रतिष्ठा, पाठशाला,-स्थापन, मदिर उजमणा उपाश्रय का निर्माण
जीर्णोद्धार कराया एव आप श्री के सदुपदेश से प्रभावित होकर रतलाम वाले शेठ श्री धनराजजी तलेरा ने रतलाम से माडव का
पदयात्रि सघ निकाला एवं रतलाम शहर थावरिया बाजार के शेठ श्री रतीचदजी वर्धमान जी बोराणा ने भोपावर का पैदल संघ निकाला
ऐसे उपकारी गुरुदेव श्री के सपूर्ण गुणो का वर्णन करने बैठे तो एक छोटी सी पुस्तक तैयार हो जाये । सुज्ञ वर्ग अल्प को बहुत समझे
भविष्य मे कभी भाग्योदय जागृत होगा तो.... .. ........... ... ...... ..... .. ... ।

अहकार एव क्रोध ने तो जिनके जीवन को छुआ भी नही ऐसे अमित वात्सल्यमय पूज्य गुरुदेव श्री की नीश्रा में उनकी अमी दृष्टि मे
शिष्याप्रशिष्या सयमी जीवन का पालन कर रही है । मे भी गौरवशाली हू कि मुझे ऐसे अमित वात्सलयमय गुरुदेव श्री का सानिध्य मिला

प्रभु से प्रार्थना है कि आप दीर्धायु हो शतायु हो चिरायु हो ऐसे परोपकारी परम स्नेहमय प्रातः स्मरणीय गुरुदेव श्री
को शतश अभिनदन वन्दन । वर्तमान मे ऐसे तारक गुरुदेव श्री की निश्रा मे ७८ शिष्या प्रशिष्या सुचारुतया ज्ञान, दर्शन एव
चारित्र की आराधना करते हुए सयम जीवन यापनकर रहे है ।

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| १६ | ९१ | मर्ा | मर्ा |
| १६ | ९५ | महन | महान |
| १६ | ९६ | चदन | चदना |
| १६ | ९७ | द्दष्टाव | द्दष्ट्वा |
| १६ | १०० | श्चचद्र | चद्रश्चकोरान् |
| १६ | ९ | शाम्त्रान्माय | शास्त्राम्नाय |
| १७ | २० | कल्पप | कल्प |
| १७ | २५ | मितस्य | मिवैतस्य |
| १८ | ६४ | ऽयन्ट | ऽप्यन्ट |
| १८ | ६४ | रव | रिव |
| १८ | ६७ | उद्रवबुद्धि | उद्रवद्धिव |
| २० | ३ | मार्ध | मार्ध |
| २० | २४ | गोडशेऽन्मि | गोडशेऽह्नि |
| २१ | ४७ | वेमि | वेत्मि |
| २२ | ८५ | महाऽनर्ग | महाऽनर्य |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| | | माश्चर्य | माश्चर्य |
| २३ | १० | सार्ध | सार्ध |
| २३ | १६ | वम्र | वस्त्र |
| | | सभ्यक्त्व | सम्यक्त्व |
| २४ | ३६ | म्रय | स्त्रय |
| १४ | ५२ | पाअविस | पावविस |
| २५ | ७ | गृहिधर्म | गृहिधर्मं |
| २५ | ८ | प्रोव्दभूवास्य | प्रोद्भूवास्य |
| २६ | ८७ | प्रोचा | प्रोच्चा |
| २६ | ८८ | मवित्रो | समित्रो |
| २६ | ९२ | द्दपद्वद्ध | द्दपद्वद्ध |
| २६ | ९७ | वम्र | वस्त्र |
| २६ | ६ | कुलदेवीयच | कुलदेवीवच |
| २६ | १८ | वकुल | वकुल |
| २७ | ३५ | इत्युवत्वा | इत्युक्त्वा |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| २८ | ५१ | कया | कन्यां |
| २८ | ६७ | श्रीचद्रा | श्रीचद्रा |
| २८ | ७० | द्दप्टवा | द्दप्ट्वा |
| २९ | ८८ | मारमे | मारभे |
| ३० | ३३ | मान्पोति | माप्नोति |
| ३१ | ०१ | युव | युवयो |
| ३१ | ५७ | म्रिय | स्त्रिय |
| ३१ | ६९ | सर्व | सर्वं |
| ३१ | ७० | परीक्षार्थ | परीक्षार्थ |
| ३१ | ७३ | शास्र | शास्त्र |
| ३२ | ९४ | सस्पर्शाव्दल्लयो | मस्पर्शाद्वल्लयो |
| ३२ | ४ | द्दकू | द्दक् |
| ३३ | १६ | तडुल | तडुल |
| ३३ | ३४ | वारम्रीभि | वारस्त्रीभि |
| | | कुलम्रीभि | कुलस्त्रीभि |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३४ | ९० | दृप्टवोर्द्ध | दृष्ट्वोर्द्ध |
| ३४ | ९० | कनो | कनी |
| ३५ | ७७ | वस्त्र | वस्त्र |
| ३५ | ८० | दृप्टवा | दृष्ट्वा |
| ३५ | ९२ | द्वद्ध | द्वद्ध |
| ३६ | ९४ | वासोर्द्ध | वासोर्द्ध |
| ३६ | ९८ | दृप्टवा | दृष्ट्वा |
| ३६ | ५०० | प्रणम्यता | प्रणम्यता |
| ३६ | १ | दृष्टवा | दृष्ट्वा |
| ३६ | २ | त | त |
| ३६ | ३ | पृच्छय्ता | पृच्छय्ता |
| ३६ | २० | श्यामास्यत्वाहि | श्यामास्यत्वाह्नि |
| ३७ | २७ | ऊर्वी | उर्वी |
| ३७ | ३६ | निर्भित | निर्मित |
| ३७ | ३८ | काण्र्य | काण्र्य |
| ३७ | ३९ | महद्वह्म | महद्ब्रह्म |
| ३७ | ४४ | दृष्टवोच्चै | दृष्ट्वोच्चै |
| ३७ | ४६ | नार्य | नार्यः |
| ३८ | ५२ | नैतमूल्य | नैतन्मूल्य |
| ३८ | ६७ | स्न्ह तय | स्नेहतया |
| ३८ | ६७ | दृष्टवै | दृष्ट्वै |
| ३९ | ८६ | दृष्टवा | दृष्ट्वा |
| ३९ | ९५ | र्वाजिनी | र्बाजिनी |
| ३९ | ९६ | नृपवब्दहुसामग्या | नृपवद्बहुसामग्र्या |
| ४० | २८ | यत्स्न्ह | यत्स्नेह |
| ४० | ३१ | स्त्रियो | स्त्रियो |
| ४० | ३७ | तेऽहि | तेऽह्नि |
| ४० | ४० | वपु ल्केश | वपु क्लेश |
| ४० | | निजवस्त्रे ण | निजवस्त्रेण |
| ४१ | ४७ | मयामत्र | महामत्र |
| ४१ | ५८ | गु्ताग्र्य | गुप्ताग्र्य |
| ४१ | ६४ | स्त्रियो | स्त्रियो |
| ४१ | ६६ | विवाहार्थ | विवाहार्थ |
| ४१ | ७१ | दृष्टवा | दृष्ट्वा |
| ४१ | ७३ | मिशेपत | विशेषत |
| ४३ | ८ | ऽभत् | ऽभवत् |
| ४३ | ११ | चोर्वी | चोर्वी |
| ४३ | १३ | जलाहर | जलाहार |
| ४३ | १४ | सास्त्रा | सास्त्र |
| ४३ | १७ | दृष्टवा | दृष्ट्वा |
| ४३ | ३० | म्यह | म्यह |
| ४४ | ४४ | वस्त्राचले | वस्त्राचले |
| ४४ | ४६ | वस्त्र | त्तद्वस्त्र |
| ४४ | ७३ | त प्रिया | तत्प्रिया |
| ४५ | ७९ | ल्बण | ल्बणे |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४५ | ६८ | दृप्टवा | दृष्ट्वा |
| ४५ | ८८ | विन्ध | विघ्न |
| ४५ | ९३ | पृप्टवे | पृष्ट्वे |
| ४५ | ९७ | त्तव्दन | त्तद्धन |
| ४६ | १०० | तव्दनिप्यामि | तद्धनिष्यामि |
| ४६ | ५ | पव्दति | पद्धती |
| ४६ | ६ | दृप्टवा | दृष्ट्वा |
| ४६ | ७ | दृप्टवा | दृष्ट्वा |
| ४६ | १५ | मगस्त्रो | सशस्त्रो |
| ४६ | १६ | दृप्टवा | दृष्ट्वा |
| ४६ | ४६ | मुत्थित | मुत्थित |
| ४६ | १७ | तन्व | तत्व |
| ४६ | १९ | स्नतम | स्तम् |
| ४६ | २३ | ममुव्दग | समुद्धर |
| ४७ | ३२ | पुर्या | पुर्या |
| ४७ | ३३ | शृगके | शृ गके |
| ४७ | ७३ | तदीक्षणक्षणात् | तदीक्षणेक्षणात् |
| ४९ | २०० | कुमार्दोययमेव | कुमार्येत्ययमेव |
| ४९ | ८ | वासस | वासस |
| ४९ | ८ | दृप्टवा | दृष्ट्वा |
| ४९ | ८ | ८ | ८ |
| | | उर्य | य्य |
| ५० | २८ | शस्तशास्त्र | शस्त्रशास्त्र |
| ५० | ५५ | मत्रि | मत्रि |
| | ८७ | दृप्टवा | दृष्ट्वा |
| ५२ | | दृष्टवा | दृष्ट्वा |
| ५२ | १६ | ऽत त्पर | ऽत पर |
| ५३ | ४१ | कथ | कथ |
| ५३ | ४५ | ज्ञास्पत्यय | ज्ञास्यत्यय |
| ५३ | ५२ | द्वय | द्वये |
| ५५ | ४०० | सुख | सुख |
| ५६ | ३३ | भूद्राति | भूद्रति |
| ५६ | ४५ | दृप्टवातद्व | दृष्ट्वा तद्व |
| ५६ | ४७ | चेतहि | चेतर्हि |
| ५६ | ५२ | किचि | कित्ति |
| ५७ | ६४ | जानाम्येव | जानाम्येव |
| ५७ | ८१ | जगाप | जगाद |
| ५८ | ८९ | दध्यो | दध्यौ |
| ५८ | ८७ | दृष्टवा | दृष्ट्वा |
| ५८ | ९० | दृष्टवा | दृष्ट्वा |
| ५८ | ९३ | दृष्टवा | दृष्ट्वा |
| | ९९ | दृष्टवा | दृष्ट्वा |
| ५९ | २० | ऽत्वि | ऽत्ति |
| ५९ | २१ | मव्याहे | मध्याह्ने |
| ५९ | २३ | त्व | त्व |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | १४ | पराजयतकौ | पराजयजयतकौ |
| २ | २१ | तद्वारसमुख | तद्वारसमुख |
| २ | ३२ | निम्नगोद्यनका | निम्नगोद्यान- |
| २ | ३७ | तावद्द्दश | तावद्दर्दश |
| २ | २९ | मुद्यग्दवाक्षमालिका | मुद्यद्गवाक्षमालिका |
| ३ | ८६ | शृ गभिवोत्तग | शृ गमिवोत्तग |
| ४ | ९१ | भूधवयौ | भूधवयो |
| ५ | | त्व | त्व |
| ६ | | कियन्यपि | कियत्यपि |
| ६ | ५४ | मगिना | मगिना |
| ६ | ७२ | स्त्रीहत्यो | स्त्रीहत्यी |
| ७ | ८६ | वश्यचूर्ण | वश्यचूर्ण |
| ७ | ८९ | वीभत्स | वीभत्स |
| ७ | ९९ | घ्रातस्येव | घ्रातस्येव |
| ७ | २ | क्वचिन्द्रामे | क्वचिद्ग्रामे |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८ | २९ | पूजास्म्यह | पूज्यास्म्यह |
| ९ | ६० | र्भा | र्मा |
| ९ | ६८ | वर्धत | वर्धते |
| १० | ९१ | हसा | हृसा |
| १० | ९२ | जगाम् | जगाम |
| १० | ९४ | गड्गिन | खड्गिन |
| १० | ९ | कुर्वत्व | कुर्वत्य |
| ११ | १८ | कृतापाया | कृतोपाया |
| ११ | ३० | विश्तया | श्चितया |
| ११ | ४३ | श्वापि | श्चापि |
| ११ | ५० | शय्यार्थ | शय्यार्थ |
| १२ | ५५ | नाभ्दुत | नाद्भुत |
| १२ | ६२ | शकोमि | शक्नोमि |
| १२ | ६३ | सजज्ञे | सजज्ञे |
| १२ | ६८ | जरादिक | जरादिक |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| १२ | ७२ | पुयंत | पुर्यंत |
| १२ | ७६ | इतस्तश्च | इतस्ततश्च |
| १२ | ७ | चैतये | चैतन्ये |
| १३ | ८५ | सैद्या | सैंध्या |
| १३ | ८७ | काभ | काम |
| १३ | १०० | वेप्सि | वेत्सि |
| १३ | १२ | सैद्या | संध्या |
| १४ | १८ | श्चेत्त | श्वेत |
| १४ | ४० | प्रविशभ्दिः | प्रविशद्भिः |
| १४ | ४२ | खसदन | स्वसदन |
| १४ | ४५ | लक्षेश्चरो | लक्षेश्वरो |
| १४ | ४५ | तभ्दाग्या | तद्भाग्या |
| १५ | ६५ | कुश | कुल |
| १५ | ६६ | पुर्व | पुर्वं |
| १५ | ८४ | ऽद्भूत | ऽद्भुत |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| ६९ | २९ | द्दष्टवा | द्दष्ट्वा |
| ७० | ३३ | पोपार्थ | पोपार्थ |
| ७० | ३८ | विमसर्ज | विसमर्ज |
| ७० | ६१ | द्दष्टवा | द्दष्ट्वा |
| ७० | ६१ | गवरो | शवरो |
| ७० | ४६ | जल्यता | चल्यता |
| ७० | ५६ | नल्किेरीणा | नालिकेरीणा |
| ७१ | ६५ | ज्ञापित | ज्ञापित |
| ७१ | ६६ | तत्रानेक | तत्रानेके |
| ७१ | ८६ | रागम्यामि | रागम्यतामि |
| ७१ | ८१ | द्दष्टवा | द्दष्ट्वा |
| ७१ | ६५ | त्वा | त्वा |
| ७२ | ११ | स्नात | स्त्रात |
| ७२ | ३ | मध्यह्न प्रग् | मध्यह्नप्राग् |
| ७२ | ६ | हरिपेण | हरिपेण |
| ७२ | ७ | द्दष्टवा | द्दष्ट्वा |
| ७३ | ३४ | मणित्र | मत्रिण |
| ७३ | ४० | गुहोत्सवै | महोत्सवै |
| ७३ | ४६ | चतस्त्रो | चतस्रो |
| ७४ | ६० | ग्र्यं | ग्य्र |
| ७४ | ६० | द्दष्टवा | द्दष्ट्वा |
| ७४ | ६३ | वस्त्रा | वस्त्रा |
| ७४ | ७० | भावो | भावी |
| ७४ | ८६ | कीऽच | क्रीड्य |
| ७५ | ६४ | मकीर्ण | सकीर्ण |
| ७५ | ६ | सार्घ | सार्थ |
| ७६ | १८ | विश्चके | विश्चक्रे |
| ७६ | १६ | विन्ध | विघ्न |
| ७६ | २८ | गृचास | गृहाण |
| ७७ | ५३ | गजाम | गजम |
| ७७ | ६६ | मुक्त | मुक्तै |
| ७७ | ७४ | तहो | अहो |
| ७८ | ६८ | वस्त्रे | वस्त्रे |
| ७८ | १ | वस्त्र | वस्त्र |
| ७९ | ३२ | सुतेय | सुतेय |
| ७९ | ३५ | मद्धान्मि | मद्वाग्नि |
| ७९ | ४१ | ऽह | ऽह |
| ८० | ४५ | यावत् | यावत् |
| ८० | ४६ | द्दष्टवा | द्दष्ट्वा |
| ८० | ५७ | पूणीकृत्य | पूर्णीकृत्य |
| ८० | ६१ | साद्भूत | साद्भूत. |
| ८० | ७६ | मिना | विना |
| ८१ | ८५ | द्दष्टवा | द्दष्ट्वा |
| ८२ | ४६ | मत्यर्ययुक् | मर्त्ययुक् |
| ८३ | ५३ | अपो | अहो |

| पृष्ठ न | श्लोक न | अशुद्ध | शुद्ध |
|---|---|---|---|
| ८४ | ९९ | परिणीतवन् | परिणीतवान् |
| ८५ | ६ | दऽस्थ | दडस्थ |
| ८५ | ९ | चद्र | चद्र |
| ८५ | १३ | कृ‌‌य | कृत्य |
| ८५ | १७ | अभजि | अभजि |
| ८५ | ३२ | वदि | बदि |
| ८६ | ६२ | सद्वस्त्रा | सद्वस्त्रा |
| ८६ | ६५ | स्रय | स्त्रय |
| ८७ | ७२ | चौर्यैं | चौर्यैं |
| ८७ | ७५ | भिमत्र्य | भिमत्र्य |
| ८७ | ८० | गत | गत |
| ८८ | १६ | स्वरूत | स्वरुप |
| ८८ | २२ | ऽमुनो | ऽमुना |
| ८९ | ६२ | वस्राणि | वस्त्राणि |
| ९० | ६५ | तौ | तो |
| ९० | ६८ | पीप | द्वीप |
| ९० | ७६ | द्वीपाव्दोहिस्थ | द्वीपाद्वोहिस्थ |
| ९१ | ३ | चद्र | चद्र |
| ९१ | ६ | ज्ञवौ | भवौ |
| ९३ | ६३ | अशोय | अशोक |
| ९४ | ९ | बलाकौध: | बलाकौघ: |
| ९५ | २९ | ताद्भूत | तादृभूत: |
| ९५ | ५२ | जिपा | जिना |
| ९६ | ५९ | ऽयत | ऽत्यत |
| ९७ | ३ | मेसज्जे | भेसज्जे |
| ९८ | २४ | रतूभ | स्तूप |
| ९८ | २६ | जज्ञिरे | जज्ञिरे |

| पृष्ठ न. | श्लोक न. | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५९ | २७ | प्रात्तो | प्राप्तो |
| ५९ | २८ | वंव्सीय | वहसीह |
| ५९ | ३२ | पु श्चिन्हे | पु श्चिह्ने |
| ५९ | ३२ | ह्रस्णता | ह्रस्वता |
| ५९ | ४० | गभ्यते | गम्यते |
| ६० | ६१ | नत्वोपविष्ठस्य | नत्वोपविष्टस्य |
| ६० | ८२ | अवस्स | अवस्स |
| ६० | ८९ | चच | चचाल |
| ६१ | २१ | स्तक | स्तच |
| ६२ | २५ | लात्वोत्तीर्य | लात्वोत्तीर्य |
| ६२ | ३३ | द्ययो | द्ययौ |
| ६२ | ३७ | चद्रना | चदना |
| ६३ | ४५ | द्दष्ट्वा | द्दष्ट्वा |
| ६३ | ४९ | स्त | स्त |
| ६३ | ५१ | रेखात्त्रय | रेरवात्रय |
| ६३ | ५६ | साहौ | साह्नौ |
| ६३ | ५७ | द्दष्टवा | द्दष्ट्वा |
| ६३ | ६२ | बधनाति | बधनानि |
| ६४ | ७३ | घृत्वा | धृत्वा |
| ६४ | ६४ | द्याहत् | द्याह |
| ६४ | ७८ | सपूज्य | सपूज्य |
| ६४ | ८१ | सुरेरित | सुरेरित |
| ६४ | ८५ | स्यैत | स्यैतत् |
| ६५ | २ | द्दष्ठवा | द्दष्ट्वा |
| ६५ | १६ | द्दष्ठवा | द्दष्ट्वा |
| ६५ | १९ | द्दष्ठवा | द्दष्ट्वा |
| ६५ | ३५ | कर | कर |
| ६६ | ४७ | सुप्ना | सुप्ता |
| ६७ | ७० | द्दष्ठवा | द्दष्ट्वा |
| ६७ | ७१ | प्रभेश | प्रवेश |
| ६७ | ७३ | चौत्तमता | चोत्तमत्ता |
| ६७ | ८३ | म | स |
| ६७ | ८९ | ययो | ययौ |
| ६७ | ९३ | द्दष्टवा | द्दष्ट्वा |
| ६७ | ९४ | रनभ्रा | रनभ्रा |
| ६७ | २ | दृष्टवा | द्दष्ट्वा |
| ६७ | २ | दृष्टवा | द्दष्ट्वा |
| ६८ | १४ | गवेषणार्थं | गवेपणार्थं |
| ६८ | १६ | तत्त्वा | तत्त्वा |
| ६८ | २२ | दृष्टवा | द्दष्ट्वा |
| ६९ | ५ | स्तो | स्तोपितो |
| ६९ | १५ | गिर्यंता | गिर्यता |
| ६९ | १६ | स्त्री | स्त्री |
| ६९ | १५ | गिर्यंता | गिर्यता |
| ६९ | १६ | स्त्री | स्त्री |

॥ ॐ अर्हं ॥

। श्रीसिद्धर्षिरचितम् ।

# ॥ श्री श्रीचंद्रकेवलिचरित्रं ॥

## । अथ प्रथमोऽध्यायः ।

ॐ ध्यात्वा श्रीजिनान्नत्वा, वंदित्वा श्रीगुरुक्रमान् । श्रीचंद्रराजराजस्य, चरित्रं प्रथयाम्यहं ॥१॥ पुरा श्री वर्धमानस्य, शिष्यः श्रीगौतमोऽग्रणीः । एकदा विहरन्नाप, वैशालीं नगरीं वराम् ॥२॥ तत्र श्रीचेटको राजा, प्रमोदात्परिवारयुक् । गणभृच्चरणान्नंतुं, समागाद्गुरुभक्तिभाक् ॥३॥ विधाय नतिकृत्यादि, स सभायामुपाविशत् । तदा श्रीगौतमस्वामी, प्रारेभे धर्मदेशनाम् ॥४॥ धर्मश्चतुर्विधः प्रोचे, श्रीजिनैः सर्वदर्शिभिः । दानशीलतपोभाव–भेदात्त्रिःश्रेयसप्रदः ॥५॥ तेषूत्कृष्टस्तपोधर्म–स्तस्य भेदास्त्वनेकशः । सर्वेषां तपसां मध्ये, गरीयस्तदिहोच्यते ॥६॥ यथा श्रीवर्धमानेन, श्रेणिकाग्रे निरूपितं । यन्नि–काचितकर्मघ्नं, तपः सर्वार्थसिद्धिदं ॥७॥ आचाम्लवर्धमानाख्यं, तस्यैव च निदर्शनं । तथेह कथ्यमानं त–त्सर्वं शृणु

॥२०॥ तच्चतुर्द्वारमारभ्य, हट्ट (गृह) श्रेण्यश्चतुर्दिशि (श)। प्रतोलिकाश्चतस्रश्च, संति तद्वारसंमुखं ॥२१॥ ईशान्यां राजवर्गीया, आग्नेय्यां व्यवहारिणः। वायव्यां क्षत्रियाः सर्वे, नैर्ऋत्यामितरे जनाः॥२२॥ यस्या बहिर्द्द षद्वद्धं, बृहत्पद्मसरोवरं (सरः सरः) वापीकूपप्रपोद्यान-मुख्य चापि महाद्भुतं। २३॥ तेन देव ! विलोक्यास्ति, सा तस्यां च वसाम्यहं। तस्येमां वाचमाकर्ण्य, भूमान् विस्मितमानसः ॥२४॥ तत्पुरीदर्शनोत्कंठा-प्रेरितः पृतनान्वितः। प्रधानमंत्रि (मति) राजेन, प्रोत्साहितस्ततोऽचलत् ॥२५॥ युग्मं ॥ प्रयाणसमये तस्य, प्राप वातोऽनुकूलतां। दिशोऽपि जज्ञिरे शांता, विहगाश्चाभवन् शुभाः ॥२६॥ एकदा गच्छतो मार्गे, प्रतिहारेण सूचिताः। चत्वारः सुभटा राज्ञः, सेवायै प्रापुरंतिकं ॥२७॥ नरेंद्रः प्राह विज्ञान, विद्यते भवतां किमु ?। ऊचुः क्रमेण ते सर्वे, स्वस्वकर्मप्रवीणतां ॥२८॥ विहगानां स्वरज्ञान १, स्वामिचित्तोपलक्षिता २। नरस्त्रीलक्षणज्ञानं ३, रथस्य भ्रामरीकलाइ ॥२९॥ इत्येता नः कलाः सति, गुरुरासां गुणंधरः। अथ श्रीक्रमसेवार्थं, प्राप्ताःस्मोऽत्राधुना वयं ॥३०॥ मानं दत्त्वा नृपेणापि, ग्रासं तच्चित्तचिंतितं। हर्षाद्विधाय ते सर्वे, चक्रिरे स्वसमीपगाः। ३१॥ यतः-

आहारनिद्राभयमैथुनानि, तुल्यानि सार्धं पशुभिर्नराणां। ज्ञानं विशेषः खलु मानुषाणां, ज्ञानेन हीनाः पशवो मनुष्याः ॥१॥

ततो भूमिपतिर्मार्गे, क्रीडां कुर्वन्निजेच्छया। निम्नगोद्यनकासार-वाप्यादिषु पदे पदे ॥३२॥ नृपलोककृतानेक-ढौकनानि यथोचित। स्वीकुर्वस्तेषु सन्मानं, यच्छन् दान ददन्नृषु ॥३३॥ विलोकयन्ननल्पानि, कौतुकानि क्रमेण सः। पुरीं दीपशिखां प्राप, श्रुतश्च विहगस्वरः॥३४॥ त्रिभिर्विशेषकं ॥ सुस्निग्धलाभो भविता, ह्यनेनात्र न सशयः। स्वरज्ञेनेति विज्ञप्तो, नृपो हृष्टः स्वचेतसि ॥३५॥ इतश्च तत्प्रभुर्भूपो (भूभुग्), दीप (प्र) चंद्रो ननाम त। पादावधार्यतां देव ! पुर्यतरिति चोक्त-

नराधिप ! ॥८॥ एकैकवर्धमानाभि-र्यावदष्टोत्तरं शतं। आचामाम्लौलिकाभिस्त-त्पारणेश्चोपवासकैः ('पारणेपूपवासकैः) ॥९॥

यत उक्तं सिद्धाते—

एगाइआणि आयं-विलाणी एकेकवुड्ढिमंताणि। पज्जंतं अब्भतट्ठाणि, जाव पुण्णं सयं तेसिं ॥ १ ॥

अयं आंबिलवद्धमाणं, नामं महातवचरणं। वरिसाणि तत्थ चउदस, मासतिगं वीस दिवसाणि ॥ २ ॥

आचामाम्लैर्वर्धमानं, तपः स्यादतिदुष्करं। य एतत्कुरुते सोऽते, श्रीचंद्रवत्सुखी भवेत् ॥१०॥ उक्तं च—

जं चंदणेण तइआ, तवियं अइगुरूअ वद्धमाणतवं। तस्स फलेण हु एसो, सिरिचंदनिवो सया सुहिओ ॥११॥ तथाहि—

जंबूद्वीपाभिधे द्वीपे, क्षेत्रे भरतनामनि। पुरं कुशस्थल नाम, पूर्वमासीन्महत्तर ॥१२॥ तत्र प्रतापसिंहोऽस्ति, दशलक्ष-पुराधिपः। न्यायवान् नृपतिस्तस्य, राज्ञीनां शतपंचकं ॥१३॥ जयश्रीरग्रिमा (रन्तिमा) तत्र, चत्वार. सति तत्सुताः। जयश्च विजयश्चैवा—पराजयंतकौ ॥१४॥ कोटिसंख्यैर्भटैरश्वै-र्दशलक्षमितैस्तथा। यशोधवलमुख्यैश्च, सहस्रै र्दशभिर्गजैः ॥१५॥ तावद्भिः स्यंदनैस्तूर्यैः, करभैश्च ध्वजैश्चरैः। सामंतैर्मंत्रिभिर्लोकैः, श्रीमान् राज्यं करोति सः ॥१६॥ युग्मं। एकदा पर्षदि क्ष्मापो, व्यवसायार्थमागतं। श्रेष्ठिनं वरदत्ताख्यं, पप्रच्छ वसतिः क्व ते ॥१७॥ ईदृगस्मादपूर्वं वा, पुरमन्यत्त्वया क्वचित्। दृष्टं चेति ततो भूपं, नत्वा सार्थेश्वरोऽब्रवीत् ॥१८॥ संति देव ! त्वदाज्ञायां, नगराणि वहून्यपि। परं दीपशिखा-नाम्नी, पुर्यस्तीद्रपुरीसमा ॥१९॥ चैत्यप्राकारसौधाद्यै-र्नान्येदृशी महीतले। यस्या मध्ये चतुर्द्वारः, प्रासादः प्रथमेशितुः

१ वौम निाहत गाठ. पुराणलिखितप्रतिप्रवन्धो ज्ञय., एव सर्वत्र वो॰ म्।

वान् ॥३६॥ यावत्पद्मसर.पाल्यां, स्वैरं तिष्ठति भूमिपः । तावद्ददर्श पुर्यंत-श्चित्रकृत्सौ (पुर्यतः, स तस्मिन् सौ) धपद्धति ॥३७॥ प्रविवेश पुरीं द्रष्टु, सम तेन स सर्वतः । विलोकयन् प्रतोल्यादि, हट्टालीस्तोरणानि च ॥३८॥ सप्तभौमिक-सौधाना-मुद्यग्दवाक्षमालिकां । राजमार्गे दृशा भूमान्, पवित्रयन्नितस्ततः ॥३९॥ वातायने ददर्श का-मेकस्मिन् सुमुखी कनीं । तन्मनो भृङ्गवत्तस्याः, पपात मुखपंकजे ॥४०॥ त्रिभिर्विशेषक ॥ तदैव स्मरभिल्लेन, शरैर्विद्धौ हृदंतरा । स क्षणं शून्यवत्तस्थौ, योगींद्र इव सल्लयात् ॥४१॥ इतश्चित्तज्ञस्तद्भावं, ज्ञात्वा विज्ञप्तवानिदं । पृथ्वीप ! तव पुण्यौघै-र्भाव्येतदपि वांछितं ॥४२॥ चमत्कृतो नृपः प्राह, साध्वेवावगतं त्वया । कस्यैतद्भवनं भद्र !, कैषा च सुमुखी वद ।४३॥ स आह तव भक्तस्य, दीप-चंद्रमहीपतेः । राज्ञ्याः प्रदीपवत्याश्च, सदनं नवभूमिकं ॥४४॥ एषा तत्कुक्षिकासार-कलहंसी मनोहरा । नाम्ना सूर्यवती पुत्री, कुमारी रूपसेवधिः ॥४५॥ अन्यच्च दीपचंद्रस्य चिंता चेतसि वर्तते । कैः कैः प्राभृतिकैरेष, प्रभुः संतोषमाप्स्यति ? ॥४६॥ अन्याऽग्रेऽप्यभवच्चिंता, देयैषा कस्य कन्यका । कुलरूपबलैश्वर्य-गुणैर्युक्तोऽस्ति को भुवि ? ॥४७॥ इति चिंतयतस्त-स्यै-तद्वार्ताज्ञापनं हि यत् । इष्टं वैद्योपदिष्टं तद् दुग्धे तु शर्करागमः ॥४८॥ रूपेण सुरतुल्यस्त्वं, तादृश्येषा कुमार्यपि । देवायं युवयोर्योग-श्चंद्रिकाचंद्रवन्ननु ॥४९॥ दृक्पुटेन कुमार्यापि, तथा पीत पुनः पुनः । नृपरूपामृतं सा हि, यथाप निर्निमेषतां ॥५०॥ ततस्त्रिक चतुष्कं च विलोक्य सकलं पुरं । सोऽर्हच्चैत्ये युगादीशं, नत्वाप्तो राजसद्मनि ॥५१॥ वीक्षमाणो विना चित्तं, तद्राजास्थानमडपे । रम्यसिंहासनासीनः, सभाशोभामपूरयत् ॥५२ । चित्तज्ञपुरुषस्याथ, युक्तोक्तैर्वचनैस्तु तैः । दीपचंद्रो भृशं हृष्टः, केकीव घनगर्जितैः ॥५३॥ ततः प्रतापसिंहस्य, कन्याकरग्रहाग्रहं । कृत्वोत्सवैः सुतोद्वाह, चकार विस्तरेण सः ॥५४॥

इतः सामुद्रिकज्ञेन, कनीं दृष्टवा सुलक्षणां। विज्ञप्तो भूधव स्वामिन्!, पट्टयोग्येयमद्भुता ।।५५।। भर्तृश्वशुरयोर्मूर्ध्नि, पितुः पितामहस्य च। मातामहस्य च छत्र (मातामहस्याविच्छिन्नं) स्यादस्याः पुत्रपौत्रयोः (?) ।।५६।। योग्येयं (योगोऽयं) लाभकृच्चास्याः, कुक्षौ तनययुग्मकं (यामल)। चितारत्नं च रत्नं च, रत्नभूमाविवास्ति यत् ।।५७।। ततो हृष्टेन भूपेन, गुणरूपातिरेकतः। शुद्धांतेषु तदा पट्ट–देवी सूर्यवती कृता।५८।। अहो भाग्यमहो रूप–महो सौभाग्यमद्भुत। लोकैरुक्त-मभूदस्या, धर्मद्रुमः फलेग्रहिः ।।५९।।

इतश्च दीपचंद्रस्य, राज्ञः सिंहपुरात्पुरात्। भ्रातृजायाश्चंद्रवत्याः, पत्युर्दूतः समाययौ ।।६०।। तं दूतं स समादाय, प्रतापसिंहभूभुजः। पुर एव हि तत्रत्यं, तत्स्वरूपमवीवदत् ।।६१।। तथाहि–देव! वासुतिका नाम, विद्यतेऽत्र महाटवी। तस्यां पल्लीपतिः शूरो, दुर्जयोऽखिलभूभुजा ।।६२।। तस्याः पश्चिमदिग्भागे, रम्यं सिंहपुरं वरं। भूभर्ता सुभगांगोऽस्ति, तत्र चंद्र-वतीपतिः ।।६३।। एकदा तस्करैः कैश्चि–त्प्रविश्य नृपसद्मनि। राज्या एकावलीहारं, लात्वा चक्रे पलायनं ।।६४।। आर–क्षकनरैः पादान्, विलोक्यानुगतैस्ततः। दृष्ट् वा(ष्ट्वा) बद्धाश्च ते नीताः, प्रभुपार्श्वं च सत्वरं।। ६५।। पार्थिवेन ततः सर्वे, ताडितास्ते जगुर्वय। शूरपल्लीपतेर्भिल्ला–स्तदादेशादिहागताः ।।६६।। श्रुत्वेति सुभगागेन, लात्वा हारं तदंतिकात्। रुषादिष्टस्तलारक्षो, व्यधात्तच्चौरनिग्रह ।।६७।। ज्ञात्वा व्यतिकरं चैत–त्तेन पल्लीमहीभुजा। रोषेण सहसागत्य, रुरुधे तत्पुरं हठात् ।। ६८ ।। अतः संप्रति दूतं मां, स प्रैषीदिह वेगतः। अत्र किंकार्यतादक्षः, त्वमेव वर्तसे प्रभुः ।।६८।। अत्रांतरे दीपचंद्रो–ऽब्रवीन्नृदेव! निश्चित। बिभ्य(भे)त्येवास्य दुष्टस्य, भयात्पुरोयमप्यलं ।।६९।। व्यवसायो न कैर्लोकैः, शक्यते कर्तुमिच्छया। पंथानोऽपि

भयेनास्य, दुर्गमा इव जज्ञिरे ॥७०॥ निशम्येति तयोर्वाचः, कुम्भिनादानिव स्फुटं । केसरीव प्रजापाल–स्तच्छिक्षायै समु–द्ययौ ॥७१॥ ताडयित्वा प्रयाणस्य, भेरीं स च चमूवृतः । चचाल शूरभिल्लेशो-परि शीघ्रप्रयाणकैः ॥७२॥ ययौ सिंह-पुरासन्न–प्रदेशे निम्नगातटे । भृत्यान् वस्त्रपटावास-करणं स समादिशत् ॥७३॥ ज्ञात्वा भूपेन भिल्लेश-सैन्येयत्तां चरैस्तदा । ह्यद्य'व मंत्रमालोच्य, सज्जीचक्रे निजा चमूः ॥७४॥

इतस्ततःसैन्यमालोक्य, भिल्लैरज्ञापि शूरराट् । स्वामिन्! प्रतापसिंहोऽय-मागात्कुशस्थलेश्वरः ॥७५॥ वृद्धभिल्लांस्ततोऽपृच्छ-त्पल्लीशः किं करिष्यते । ते प्राहुर्नश्यते देव ! बलीयान्नृपकेसरी ॥७६॥ पुन' स आह भो वृद्धा ! नंष्ट्वा स्थाने क्व गम्यते?! तन्न किंचिदगस्य य-द्यमस्येवास्य भूभुज· ॥७७॥ तूष्णीं स्थितेषु सर्वेषु, किंचिद्विमृश्य चेतसि । प्रवरं गंधहस्तींद्र-माहरोह स भिल्लपः । ७८ । समं स्वशबरेणाप, रणक्षेत्रं रयादसौ । इतः प्रतापसिंहोऽपि, तं वीक्ष्य तत्र चागमत् ॥७९॥ यावत्स्व-कटकं दृष्ट्या, विलोकयति तावता । निद्रायमाणान् सोऽद्राक्षी–न्निर्मदानखिलान् गजान् ॥८०॥ किमेतिदिति संपृष्टे, नृपेण दीपचंद्रराट् । जगौ नेतरयं पट्ट–हस्ती गंधगजो द्विपः ॥८१॥ तेन तद्गंधोऽमी हि, जज्ञिरे निर्मदा इभाः । श्रुत्वेति चिंत-यामास, राजा किमधुनोचितं ? ॥८२॥ तदा पुमान् स विज्ञप्ति–मकरोद्रथखेटकः । आरु(रो)ह स्वरथं देव !, विलोकय कलां तु मे ॥८३॥ ततः कोदंडमादाय, रथमारुह्य पार्थिवः । अरिं समभिगम्यास्था–द्यावद् दुष्टः स धावति ॥८४॥ तावत्तरूगामभितः, सूतेन भ्रामिते रथे । भूपः शरैः करींद्रस्थ, जघान शूरभिल्लपं ॥८५॥ युग्मं ॥ गिरेः शृंगभिवोत्तुंगं, पातयित्वा गजाद्रिपुं । जीवंतं नृपतिः काष्ठ–पंजरे तमचिक्षिपत् ॥८६॥ तं श्रीजयकलशाख्य–मपूर्वं गंधहस्तिनं । स्वीचक्रे

च ततो भिल्लै–रन्यै. सर्वः पलायितं ।। ८७ ।। तदा जयजयाराव, उच्चच्छाल समंततः । सुभगांग पुरादेत्य, ननाम त नरोत्तमं ।।८८।। तस्मै दत्त्वातिसन्मान, सार्थे लात्वा च भूपराट् । ततस्तस्याम्रटव्यां स, ययौ पल्लीं ललौ च तां ।।८९।। लुंटयित्वा स्वभृत्यैस्ता–मेक मौक्तिकमूट (ढ) कं । षट्पचाशत्स्वर्णकोटीः, स्वकोशेऽन्यच्च सोऽक्षिपत् ।।९०।। शेषं धनं विभज्य।थ, लोऽदाद् भूधवयौस्तयोः । पट्टकूलादिवस्तूनि, भटानां च यथाक्रम ।।९१।। ततो हृष्टो नृपोऽवादी–न्त्रोः चत्वारोऽप्यमी नराः । प्राप्ता मम परीक्षाया, सत्याः स्वस्वकलागुणैः ।।९२।। यन्मेऽत्राभून्महालाभ–श्चेतोऽप्यवगत तदा । कन्या फलवती चापि, जयश्च रथखेटनात् ।।९३ । अहो ज्ञानमहो बुद्धि–रहो शास्त्रपरिश्रम । अहो कलाविदग्धत्वं, तानाहूय शशस सः ।।९४।। महाप्रसाददानैश्च, तान् सन्मान्य पृथवपृथक् । तत्र सूर्यवती।नाम्ना, पुरं सूर्यपुराभिध ।।९५।। स्थापयित्वा तयो राज्ञोः, समर्प्य कियती भुवं । काश्यपीशस्तत. सिह–पुरे पुनः समभ्यगात् ।।९६।। युग्म ।। विलोक्य नगरं तस्मा–त्सोऽचलद्विससर्ज च । सुभगांगनृप प्राप्तः, क्रमाद्दीपशिखां पुरी ।।९७।। दिनानि कतिचित्स्थित्वा, पुरस्तस्याश्चचाल सः । लात्वा सूर्यवती देवी, सं ध्यादिसखीसयुता ( च संध्यादिसखीयुतां ) ।।९८।। पुरीजनयुतं दीप–चद्र स्थापितवान्नृपः । शिक्षां कुलागनायोग्यां, पुत्र्याः प्रदाय साजसं ।।९९।। ववले साऽश्रुनीरार्द्र–नेत्रा प्रदीपवत्यपि । ततः स्तोकैर्दिनैराप, राजा कुशस्थलं पुरं ।।१००।। युग्मं ।। महोत्सवं ल्तदा नाना–विधैः श्रृंगारिते पुरे । प्रतापसिहः पृथ्वीशः, प्रविवेश शुभेऽहनि ।।१।। समं ताभिः स्वराज्ञीभि--र्भोगान् मानुष्यकान् नृपः । भोक्तुं लग्नः सुखेनोच्चैः, प्राच्यपुण्यप्रसादतः ।। २ ।। यतः—

धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बल, धर्मेणैव भवंति निर्मलयशोविद्यार्थसंपत्तयः ।

कांताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ ३ ॥ इत्यादि ॥

अथान्यदा सुता राज्ञ–श्चत्वारोऽपि जयादयः । जयावासे गवाक्षस्थाः, संति क्रीडंत (ति) इच्छया ॥४॥ तदा राजपथे लोकान्, बहूनेकत्र संस्थितान् । दृष्ट्वा तैर्भोः किमित्येत–त्पृष्टाः स्वसेवका जगुः ॥५॥ क्षितिपालांगजन्मानः, कोऽपि नैमित्तिकोऽधुना । पुरेऽस्मिन्नागतोऽस्त्यत्र, सोऽयं पुरजनैर्वृतः ॥६॥ कौतुकेन कुमारैस्तै–राकारितो निजैर्भटैः । तत्राययौ निमित्तज्ञ, आशीर्वादपरायणः ॥७॥ उचितप्रतिपत्त्या तै–रादिष्टः स उपाविशत् । तस्मिन् सुखासनासीने, कुमारैः पृच्छ्यते स्म सः ॥८॥ कस्त्वमागाः कुतो भद्र, कुत्र गंतासि वेत्सि किं । इति पृष्टेऽत्र कालज्ञो–ऽवादीद्धो नृपनंदना ॥९॥ शृणुतात्र समस्तीतः, पश्चिमाशास्यमंडनं । पुरं सिंहपुरं नाम, धर्मलक्ष्मीमनोहरं ॥१०॥ तत्रास्ति सुभगास्येंदुः, सुभगांगो नराधिपः । तस्मिन् बभूव वित्ताढ्यो, गणकः श्रीधराभिधः ॥११॥ तस्याभून्नागिलानाम्नी, वल्लभा प्राणवल्लभा । धरणस्तु तयोः पुत्रः, प्राप्तस्त–रुणतां क्रमात् ॥१२॥ इतस्तत्पुरवास्तव्यो, गणकोऽस्ति प्रियंकरः । भार्या शीलवती तस्य, श्रीदेवी तनया तयोः ॥१३॥ सा क्रमाद्यौवनं प्राप्ता, रूपलावण्यशालिनी । कलाकुशलिनी जैन-धर्मे रता विशेषतः ॥१४॥ तां कनीं मार्गयित्वा च, श्रीधरः समहोत्सवं । विशुद्धेऽह्नि निजं पुत्रं, धरणं पर्यणाययत् ॥१५॥ सा सुता (सती) सुविशुद्धास्या, लज्जानतमुखी च सा । सार्हद्धर्मक्रियासक्ता, सानिशं मित (सत्य) भाषिणी ॥१६॥ पर सा नागिला श्वश्रू–स्तस्या निष्ठुरभाषिणी । अर्हनिशमभूत्सर्व-कर्मकर्या अपि ध्रुवं ॥१७॥ वहमानेऽरघट्टेऽपि, खटत्कारविधायिनी । काष्ठयष्टिर्यथा कूपे, तथा तस्यास्तु साभवत् ॥१८॥ यतः-

शय्योत्पाटनगेहमार्जनपयः पावित्र्यचुल्लीक्रिया, स्थालीक्षालनधान्यपेषणभिदा गोदोहतन्मंथने ।

डिंभानां परिवेषणादि च तथा पात्रादिशौचक्रिया, श्वश्रूभर्तृननांदृदेवृविनयैः कष्टं वधूर्जीवति ॥१९॥

नित्यं सा जिनवाग्भक्ता, पितृभ्यां प्रातिवेश्मिकैः । शं तवास्तीति पृष्टेऽपि, चार्वेव तद्गृहं जगौ ॥२०॥ किं च भग्नविनष्टादि, दर्शयित्वा च नागिला । सुतं रोषाकुलीचक्रे, रुष्टस्तां कुट्टयत्यसौ ॥ २१ ॥ तथापि सा कुलोत्पन्ना, न तस्या दूषण ददौ । प्राक्कर्मणां विपाको हि, ममायमिति चिंतयेत् ॥२२ । एवं कियत्सु यातेषु, दिनेषु तद्गृहांतरा । पतितं विस्मृत चापि, श्वसुरस्यागुलीयकं ॥२३॥ तत· प्रातस्तया वध्वा, प्रमार्ज्य प्रचयीकृते । पुंजके मुद्रिका लेभे, मुक्ता चांतर्गृहालये ॥ २४ ॥ इतस्ततस्मृतिसद्भावे, प्रष्टुं लग्नाश्च ते मिथः । हृष्टास्ति केनचिन्मुद्रा, विलोकितापि नाप सा ॥२५॥ गोमयार्थं वधूः सा च, गतासीत्पशुवाटके । तदा तत्रागताश्रौषी–द्गतैव सा गतैव सा ॥ २६ ॥ तत् श्रुते सहसा गत्वा, तामादाय तदालयात् । ददौ श्वशुरवर्गस्य, करे हृष्टास्ततोऽखिलाः ॥२७॥ अस्मिन् व्यतिकरे ज्ञाते, श्वश्रूस्तच्छिद्रमासदत् । हुं हुमस्तीदृशी यत्र, वधूरूपेण तस्करी ।.२८॥ गमनात्सर्ववस्तूनां, कथ स्थास्यति मद्गृहं । विलोकयत भो लोका, गृहस्याचरणानि नः ॥ २९ ॥ युग्मं ॥ एषा यदीदृशी दारा (सदेदृशाचारा), क श्रृणोत्यत्र मद्वचः । सर्वस्यापि गृहे चास्ति, वधूः कुत्रापि नेदृशी ॥ ३० ॥ अहो एतद्हृदो दाटर्यं, चोरिता पूज्यमुद्रिका । वाढं गाढस्वरेणैव, तथा प्रेक्षणकं कृतं ॥ ३ १॥ इतो गृहागतं पुत्रं, सर्वमश्रावयच्च सा । अहो सुकुलजा पत्नी, गृहे तवैव नंदति ॥३२॥ श्रुते व्यतिकरे तस्मि–स्तयोदिते यथा तथा । धरणः स रुषा सम्य–गविचार्य च तां सती ॥ ३३ ॥ जघान लकुटेनोच्चै–स्तच्छिरः स्फुटितं तत· । पपात सा रया·द् भूमौ, जल्पंत्यर्हन्नमस्क्रियां ॥३४॥ युग्मं ॥ ततो रक्तप्रवाहश्च, निःसृतो मूर्च्छितापि सा । हा हा हेत्युच्चरर्द्भिस्तै–रौषधादिक्रिया कृता ॥३५॥ केनापि

तत्र तत्पित्रो-स्तत्स्वरूपेऽवबोधिते । तावप्याजग्मतुः शीघ्रं, शिरःकुट्टनपूर्वक ॥३६॥ हा वत्से किमिदं जातं, भामनं (भ्रमणं) तव नेत्रयोः । विलोकय मदास्यं त्वं, लात्वांके रुरुदेवया ॥३७॥ हा पुत्रि तव वाक्यानि, कानि कानि स्मराम्यहं । मातर्मात-रिति प्राज्ञा, कथयिष्यति का पुनः ॥३८॥ हा सुते वस्तु तत्तत्वां, विना का मार्गयिष्यति । तैस्तैः क्रीडनकैर्भद्रे, खेलन का करिष्यति ॥३९॥ हा नंदिनि लघुत्वेऽपि, न ते सन्मुखभाषणं । पित्राद्यालापितापि त्वं, लज्जया न स्फुटोत्तरा ॥ ४० ॥ उपालंभोऽपि नो कस्य, रुदनं न मुखे तथा । शिक्षायां मुखवक्रत्वं, न हि मुग्धे तवैकदा ॥४१॥ सा क्रिया सार्हती पूजा, साप्यभिग्रहधारिता । तत्तपो विरतिः सापि, त्वय्येवान्यत्र नांगजे ॥४२॥ हा पुत्रि किं स्थितेति त्व, मातुर्देह्युकमुत्तरं । ईदृश मे सुतारत्नं, विधातापि न सासहिः ॥ ४३ ॥ विललाप पिताप्येवं, भर्त्तापि धरणोऽरुदत् । अविमृश्य कृतं रोषा-त्किं हा पापात्मना मया ॥४४॥ अस्या असति दोषेऽपि, मन्निष्ठुरप्रहारतः । यायी कदापि जीवश्वे-द्धत्याकृत्तदहं ननु ॥ ४५ ॥ धिक्कृता नागिला लोकैः, सदैषा कूटभाषिणी । सत्यैषा छुटिता मृत्वा, मंडूकीवाहिवक्त्रतः ॥४६॥ एवं वदस्तु लोकेषु, तद्भा-ग्येन कुतोऽप्यथ । वैद्यः कोऽप्याययौ तत्र, मंत्रांभसा सिषेच तां ॥४७॥ मनागवाप्तचैतन्या, बहुवारांबुसेकतः । स तत्स्व-रूपमालोक्य, धर्मौषधमकारयत् ॥४८॥

इतोऽथ सा पितृभ्यां स्व-गृहे नीता सुसाधुतः । सावधानतया सर्वं, श्रद्दधे जिनभाषितं ॥ ४९॥ कृत्यान्याराधनादीनि, सर्वसत्त्वक्षमापनं । वस्त्वेकपातकस्थान-मोचनं चित्तशोधन ॥ ५० ॥ पुण्यानुमोदनं सप्त-क्षेत्र्यां स्वधनरोपणं । संघभक्ति नमस्कार-गुणनं च तपःश्रुतिं॥५१॥ सद्भावं हन्यमानांगि-मोचनं ममतोज्झनं । सम्यक्त्वानशनब्रह्म-व्रताद्युच्चारणं विधेः॥५२॥

विधाय प्रोंतकाल सा, साधयामास सुंदरं । तेन पुण्यप्रसादेन, श्रीदेवी प्राप सद्गतिं ।।५३।। चतुर्भिः कलापकं । कियन्त्यपि कृते शोके, सुताशोकं विहाय तौ । धर्मोद्यतावभूतां हि, यद्धर्मात्सुखमंगिनां ।। ५४ ।। इतस्तत्र जनैर्ज्ञाते, तद्वृत्तांते निराकृतः । श्रीधरस्तु न शक्नोति, मुखं दर्शयितुं पुरे ।।५५।। पुनः पुरांतरप्राप्त–कन्यो धरणहेतवे । श्रीधरोऽपि पुरेऽन्यस्मिन्, गत्वा गणकनदिनीं ।।५६।। नाम्ना कामप्युमादेवीं, स्वसुते (त) पर्यणाययत् । अत्युद्धतातिरोषा सा, सर्वस्य प्रतिभाषिणी ।।५७।। युग्मं ।। सा हठाद् गृहकर्माणि, करोति नैव कान्यपि । पदे पदे च तेषां त–त्कर्ममर्मप्रकाशिनी । ५८।। तया तथा कृता श्वश्रूर्यथा कर्मकरी स्वय । भयेन तद्वशा साभू-द्वयाध्य्रा अग्रे यथा त्वजा ।। ५९ ।। कालेनाथ श्वशुरयो-र्मृतयोः साथ वल्लभं । धरणं स्ववशीचक्रे, मायया भक्तियुक्तितः ।। ६० ।। सोऽभूत्प्रियागुणग्राही, सोमदेवसुहृत्पुरः । सोऽप्यार्हतो हितं प्राह, सखे सत्यमिदं परं ।।६१।। यतः–प्रत्यक्षे गुरवः स्तुत्याः, परोक्षे मित्रबांधवा । कर्मांते दासभृत्याश्च, पुत्रा नैव मृताः स्त्रिय. ।। १ ।।

निस्त्रिंशवत्सुनिस्त्रिंशा, कुटिला मृगशृंगवत् । नदीवन्नीचगा नारी, वज्रवत्कठिना हृदि ।।६२।। मनोऽन्यद्व वचोऽप्यन्य–द्यत्क्रियान्यैव दृश्यते । तदस्याः कः प्रिये स्नेहः, किं व्याख्यासि च मुग्धतां ।। ६३ ।। धरणेन किमित्येत–त्पृष्टे पुनः सखाह सः । त्वत्पत्नी मित्र जाने यद्, गृहे तिष्ठति नैकदा ।।६४।। तन्मायाचरणैरेषां–तःस्नेहा नैव भाविनी । ग्रामांतरमिषाद्रात्रौ, विधेहि तत्परीक्षणं ।।६५।। ओमित्युक्त्वा ततस्तेन(?), गृहे गत्वातिकष्टतः। तस्या आदेशमादाय, रागी सोऽगात्सुहृद्गृहे।।६६।।

इतोऽन्यत्र क्वचित्तस्यां, गतायां रजनीमुखे । मित्रोक्त्या निजगेहांत–रुपर्यस्थात्स चौरवत् ।। ६७ ।। दत्त्वा तथैव तद्द्वारं, सखागात्स्वगृहे ततः । उमा क्षणांतरे तत्र, कुतोऽप्यागात्समुत्सुका ।। ६८ ।। निर्ममे च विशेषान्न–पाकं तल्पक्रियादि च ।

तदा स्वमुखमाच्छाद्य, कोऽप्यागात्तद्गृहे पुमान् ॥६९॥ विस्मयाद्धरणेनापि, कोऽयमित्यवलोकितः । आः पाप्मा रणधीरोऽयं,
क्षत्रियो मद्गृहे कथं ॥७०॥ ततस्तया गृहद्वारं, दत्त्वा स प्रीणितो भृशं । स्नानान्नपानविधिना, रंत्वा सुप्तौ च तत्र तौ
॥७१॥ तथाविधौ च तौ दृष्ट्वा, रोषात्सोऽधः समाययौ । द्वावेतौ हन्मि नवरं, स्त्रींहत्योऽहं यदग्रतः ॥७२॥ विमृश्येति
तलारक्ष–सुतस्तेन हतोऽसिना । द्वारमुद्घाट्य तत्रैव, सोऽस्थादथात्र (दधान्न) भावि किं ॥७३॥

इतस्तत्कंठरक्तौघ–शैत्यात्सुप्तोत्थिता तु सा । हा हा हा किमिदं जातं, हतोऽयं केनचिन्मृतः॥७४। द्वारमुद्घाटितं दृष्ट्वा,
नन्वयं मारितोऽरिणा । तं च खड्गादिसामग्री-युतं बबंध वाससा ॥ ७५ ॥ शिरस्याधाय सा गेहा-न्निर्ययौ धरणोऽप्यनु ।
क्वचित्कूपे रयात्प्रोज्झ्य, सा तथैवाययौ गृहे ॥७६॥ धरणोऽपि गृहद्वारा-द्बहिःस्थोऽचिंतयद् हृदि । अहो क्रौर्यमहो धाष्टर्य-
महो अस्याः कुकर्मता ॥७७॥ सापि क्षिप्रादिकान्नानि, निक्षिप्य प्रौढभाजने । अरर्रि सुदृढं दत्त्वा, तल्लात्वा निरगात्पुनः ॥७८॥
सोऽपि कौतुकतश्छन्नं, प्रियापृष्टिस्थितोऽचलत् । सा पुरीजलमार्गेण, बहिर्निर्गत्य निर्भया ॥ ७९ ॥ श्मशानमप्यतिक्रम्या–विश-
द्गिरिगुहांतरे । तदंतर्गृहमस्त्येकं, दीपमालामहोयुतं (महाद्युति)॥८०॥ युग्मं ॥ तत्रास्ति योगिनीवृंद-वृता सत्पीठिकासिता ।
विकटा योगिनी नाम्नो–ग्रमुखी खर्परीमुखी ॥८१॥ ताः सर्वा अपि तां दृष्ट्वा, रे रे उमा समागता । हर्षकोलाहलं चक्रु–
स्तद्दत्तान्नातितोषिताः ।८२॥ सा तां प्रणम्य पादाग्रे, स्थिता चालापिता तया । भद्रे स साधितो मंत्रः, स्वामिनि त्वत्प्र-
सादतः ॥८३॥ पुनः किं वदसि प्राज्ञे, माहेश्वरि प्रसीद मे । तरूत्पतनविद्यां ता–मर्थये तव शिष्यिणी ॥ ८४ ॥ खर्पर्याह,
शुभे तर्हि, मम देहि महाबलिं । साह मातर्बलिं भर्तु–र्दास्यामि कृष्णकृ (त) त्तिथौ ॥८५॥ भव्यमित्युक्तवत्येषा, योगिनी

विससर्ज तां । यांत्या तयांजलिं कृत्वा, वश्यचूर्णं, (ततोऽद) र्थितं ॥८६॥ साह प्रार्गापितं चूर्णं, तत्क्वागादंब तेन ना। वशीकृतो मृतः सोऽद्य, तद्योगिन्या समर्पितं ॥८७॥ ततः प्रणम्य तां भक्त्या, सा तथैवागतालये। धरणोऽप्येवमस्यास्तद्, दृष्ट्वा श्रुत्वा च भीतवान् ॥८८॥ भयाश्चर्यरसौ रौद्र- रसेन सह तध्धृदि। वीरशोकौ च वीभत्स-रसयुक्तौ बभूवतु. ॥८९॥ विहाय हास्यशृं-गारौ, स शांतरसमाप्तवान्। धिगेनां कुटिलां माया-विनीं दुश्चारिणीमिति ॥९०॥ अंचितयच्च वल्यर्थं, चूर्णेनाहं वशीकृतः। कथमन्यत्र यास्यामि, शृंखलावद्धगौरिव ॥९१॥ विमृश्येति सुहृद्गेहे, गतः पृष्टश्च तेन सः। प्रियाव्यतिकरं सर्वं, यथा जातं जगौ तदा ॥ ९२ ॥सखाह मित्र ! किं दुखै, किं निंदाभिर्भयेन किं। स्वभावचपला नार्यः, कर्मणां गतिरीदृशी। ९३ ॥ यतः–

रविचरियं गहचरियं, ताराचरिय च राहु (चंद) चरियं च। जाणंति बुद्धिमंता, महिलाचरियं न याणंति ॥९४॥

जलमज्झे मच्छपयं, आकासे पंखियाण पयपंती। महिलाण हियमग्गो, तिण्णवि लोए न दीसंति ॥ १ ॥

अथ त्वं किमु कर्तासि, स आह गद्गदस्वरः। तदास्यमविलोक्यैव, गंता देशांतरे क्वचित् ॥९५॥ हत्याभ्यां पातकीभूतः, कर्तास्मि प्राणमोचनं। मित्रैवं ननु मा कार्षी–धंनं गृह्ण(?)निजाद् गृहात् ॥ ९६ ॥ भाविनी स्वेन सोन्मत्ता, दुग्धेनेव च सर्पिणी। क्वचिद्गच्छ गुरोर्वाक्या-त्तत्प्रायश्चित्तमाचर ॥९७॥ युग्मं ॥ ततः सुहृद्गिरा सोऽपि, प्रातः प्राप्तः स्वसद्मनि। पादा-वधार्यतां नाथ!, सोत्तस्थौ गुरुसंभ्रमात् ॥९८॥ कुर्वती कृत्रिमस्नेह–मनिष्टा तस्य साभवत्। घ्रातस्येव मनस्तृप्त्यै, क्वथिता क्षिप्रमेव हि (घ्रातस्य वमनोत्पत्तौ, क्व (कु) थिता क्षिप्रकेव हि) ॥ ९९ ॥

इतश्च रणधीरं त, कूपान्निष्कासितं तदा। जनैर्दृष्ट्वा हहा चक्रे, पत्यग्रे चोमयापि हि ,।२००॥ ततस्तेन निजा लक्ष्मी-

